॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

## हलन्तस्त्रीलिङ्ग-नपुंसकलिङ्गप्रकरणम्

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar


**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेविका संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें।

सूचना— यह अध्ययन सामग्री पूर्णतः निश्शुल्क है तथा इस पर कोई कॉपीराइट भी नहीं हैं।

दिनाङ्कः-

22.12.2020

अस्माकं सम्पर्कसूत्राणि—

e-mail अणुवाक्— samskritsaarah@gmail.com

ह्वाट्सैप्— ८८९९१८७९२९ (भवतां परामर्शानां स्वागतम्)

YOUTUBE — संस्कृतसारः @sanskrit sar

FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

(सम्पर्कसूत्रम्-9424692199)

sanskritshiksha2020@gmail.com

# हलन्ते स्त्रीलिङ्गाः



- **ह्** → १.उपानह्, २.उष्णिह्
- **व्** → १.दिव्
- **र्** → १.गिर्, २.पुर्, ३.चतुर्
- **म्** → १.किम्, २.इदम्
- **द्** → १.त्यद्, २.तद्, ३.एतद्
- **च्** → १.वाच्
- **प्** → १.अप्
- **श्** → १.दिश्, २.दृश्
- **ष्** → १.त्विष्, २.सजुष्, ३.आशिष्
- **स्** → १.अदस्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु 'उपानह्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.उपानत् 2.उपानद् | उपानहौ | उपानहः |
| सम्बोधनम् | हे 1.उपानत् 2.उपानद् | हे उपानहौ | हे उपानहः |
| द्वितीया | उपानहम् | उपानहौ | उपानहः |
| तृतीया | उपानहा | उपानद्भ्याम् | उपानद्भिः |
| चतुर्थी | उपानहे | उपानद्भ्याम् | उपानद्भ्यः |
| पञ्चमी | उपानहः | उपानद्भ्याम् | उपानद्भ्यः |
| षष्ठी | उपानहः | उपानहोः | उपानहाम् |
| सप्तमी | उपानहि | उपानहोः | उपानत्सु |

❖ नहो धः। यथायथं जश्त्वं चर्त्वञ्च

- ❖ सूत्रम्- नहो धः॥ (८,२.३४)
- ❖ सूत्रार्थः- नहो हस्य धः स्याज्झलि पदान्ते च॥
- ❖ सूत्रम्- नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ॥
- ❖ सूत्रार्थः- क्विँबन्तेषु पूर्वपदस्य दीर्घः।
- ❖ उपानत्, उपानद्। उपानहौ। उपानत्सु॥

उप+नह्+ क्विँप्

उपानह्+ स् (हो ढः> प्राप्ते)

उपानध् + (नहो धः)

उपानद्-2 (झलां जशोऽन्ते)

उपानत्-1 (वाऽवसाने)

१.नह्— उपानह्

२. वृत्— नीवृत्

३.वृष्— प्रावृष्

४.व्यध्—हृदयावित्

५.रुच्— नीरुच्

६.सह्— ऋतीसह्

७.तन्— परीतत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु 'उष्णिह्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.उष्णिक् 2.उष्णिग् | उष्णिहौ | उष्णिहः |
| सम्बोधनम् | हे 1.उष्णिक् 2.उष्णिग् | हे उष्णिहौ | हे उष्णिहः |
| द्वितीया | उष्णिहम् | उष्णिहौ | उष्णिहः |
| तृतीया | उष्णिहा | उष्णिग्भ्याम् | उष्णिग्भिः |
| चतुर्थी | उष्णिहे | उष्णिग्भ्याम् | उष्णिग्भ्यः |
| पञ्चमी | उष्णिहः | उष्णिग्भ्याम् | उष्णिग्भ्यः |
| षष्ठी | उष्णिहः | उष्णिहोः | उष्णिहाम् |
| सप्तमी | उष्णिहि | उष्णिहोः | उष्णिक्षु |

- क्विँन्नन्तत्वात् कुत्वेन घः।
- उष्णिक्, उष्णिग्। उष्णिहौ। उष्णिग्भ्याम्॥

उष्णिह्+ स् (हो ढः> प्राप्ते)
उष्णिघ् + (क्विँन्प्रत्ययस्य कुः )
उष्णिग्-2 (झलां जशोऽन्ते)
उष्णिक्-1 (वाऽवसाने)

- क्विँन्प्रत्ययस्य कुः। यथायथं जश्त्वं चर्त्वञ्च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# वकारान्तेषु 'दिव्'शब्दस्य रूपाणि (अव्युत्पन्नं प्रातिपदिकम्)

दिव्= स्वर्गः / आकाशः

लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | द्यौः | दिवौ | दिवः |
| सम्बोधनम् | हे द्यौः | हे दिवौ | हे दिवः |
| द्वितीया | दिवम् | दिवौ | दिवः |
| तृतीया | दिवा | द्युभ्याम् | द्युभिः |
| चतुर्थी | दिवे | द्युभ्याम् | द्युभ्यः |
| पञ्चमी | दिवः | द्युभ्याम् | द्युभ्यः |
| षष्ठी | दिवः | दिवोः | दिवाम् |
| सप्तमी | दिवि | दिवोः | द्युषु |

❖ द्यौः। दिवौ। दिवः। द्युभ्याम्॥

❖ सूत्रम्- दिव औत्॥ (७,१.८४)
❖ सूत्रार्थः- दिविति प्रातिपदिकस्यौत्स्यात्सौ।
❖ सूत्रम्- दिव उत्॥ (६,१.१३१)
❖ सूत्रार्थः- दिवोऽन्तादेश उकारः स्यात् पदान्ते।

दिव्+ स्
दि औ+ स् (इको यणचि- यण्)
द्यौः

दिव्+ भ्याम्
दि उ+ भ्याम्
द्युभ्याम्

❖ दिव औत्- औ
❖ दिव उत्- उ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रेफान्तेषु 'गिर्-पुर्'शब्दयो रूपाणि (क्विँप्रत्ययान्तौ)

गिर् - पुर्= वाणी , ग्रामः/नगरम्

## लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | गीः | गिरौ | गिरः |
| सम्बोधनम् | हे गीः | हे गिरौ | हे गिरः |
| द्वितीया | गिरम् | गिरौ | गिरः |
| तृतीया | गिरा | गीर्भ्याम् | गीर्भिः |
| चतुर्थी | गिरे | गीर्भ्याम् | गीर्भ्यः |
| पञ्चमी | गिरः | गीर्भ्याम् | गीर्भ्यः |
| षष्ठी | गिरः | गिरोः | गिराम् |
| सप्तमी | गिरि | गिरोः | गीर्षु |

❖ गीः। गिरौ। गिरः॥ एवं पूः॥

❖ सूत्रम्- र्वोरुपधाया दीर्घ इकः॥ (८,२.७६)

❖ सूत्रार्थः- रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते।

| | | |
|---|---|---|
| गिर्+ स् | गिर्+ भ्याम् | गिर्+ सु |
| गीर् | गीर् + भ्याम् | गीर् + सु (रोः सुपि) |
| गीः | गीर्भ्याम् | गीर्षु |

❖ र्वोरुपधाया दीर्घ इकः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रेफान्तेषु ‘चतुर्’शब्दस्य रूपाणि

चतुर्= चतुर्त्वसङ्ख्याविशेषः

लघुसिद्धान्तकौमुद्याम्
(हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | चतस्रः |
| द्वितीया | चतस्रः |
| तृतीया | चतसृभिः |
| चतुर्थी | चतसृभ्यः |
| पञ्चमी | चतसृभ्यः |
| षष्ठी | चतसृणाम् |
| सप्तमी | चतसृषु |

❖ चतस्रः। चतसृणाम्॥

चतुर्+ अस्
चतसृ+ अस्
चतस् र्+ अस्
**चतस्रः**

चतुर्+ आम्
चतसृ+ आम्
चतसृ+ नुँट् आम्
चतसृ+ नाम्
**चतसृणाम्**

- ❖ सूत्रम्— त्रिचतुरोः स्त्रियां तिसृचतसृ
- ❖ सूत्रार्थः — स्त्रीलिङ्गयोः त्रिचतुरोः ‘तिसृ-चतसृ’ एतौ स्तः।
- ❖ सूत्रम् — अचि र ऋतः
- ❖ सूत्रार्थः —‘तिसृ-चतसृ’ एतयोर्ऋकारस्य रेफादेशः स्यादचि।
- ❖ वार्तिकम् — नुँम्-अचिर्-तृज्वद्भावेभ्यो नुँट् पूर्वविप्रतिषेधेन

❖ त्रिचतुरोः स्त्रियां तिसृचतसृ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु 'किम्'(का) शब्दस्य रुपाणि

किम्= प्रश्ने, वितर्के, निन्दायाम्

लघुसिद्धान्तकौमुद्याम्
(हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | का | के | काः |
| द्वितीया | काम् | के | काः |
| तृतीया | कया | काभ्याम् | काभिः |
| चतुर्थी | कस्यै | काभ्याम् | काभ्यः |
| पञ्चमी | कस्याः | काभ्याम् | काभ्यः |
| षष्ठी | कस्याः | कयोः | कासाम् |
| सप्तमी | कस्याम् | कयोः | कासु |

❖ औङ आपः— शी ❖ आङि चापः ❖ सर्वनाम्नः स्याड्ढ्रस्वश्च— स्याट्

❖ का। के। काः। सर्वावत्॥

- ❖ सूत्रम्- किमः कः॥ (७,२.१०३)
- ❖ सूत्रार्थः- किमः कः स्याद्विभक्तौ।
- ❖ सूत्रम्- औङ आपः॥ (७,१.१८)
- ❖ सूत्रार्थः- आबन्तादङ्गात्परस्ययौङः शी स्यात्।
- ❖ सूत्रम्- आङि चापः॥ (७,३.१०५)
- ❖ सूत्रार्थः- आङि ओसि चाप एकारः।
- ❖ सूत्रम्- सर्वनाम्नः स्याड्ढ्रस्वश्च॥
- ❖ सूत्रार्थः- आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः।

किम्+ स्
का+ स्
का

का+ औ
का+ ई
के

का+ आ
के+ आ
कया

का+ ए
क+स्या ए
कस्यै

का+ आम्
का+ साम्
कासाम्

(अजाद्यतष्टाप्—टाप् (आ)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु 'इदम्' शब्दस्य रूपाणि

इदम्= सन्निकृष्टवस्तुनिर्देशे

## लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | इयम् | इदे > इमे | इदाः > इमाः |
| द्वितीया | इदाम्> इमाम्/एनाम् | इमे/ एने | इदाः > इमाः/ एनाः |
| तृतीया | इदया > अनया/एनया | इदाभ्याम् > आभ्याम् | इदाभिः > आभिः |
| चतुर्थी | इदस्यै >अस्यै | आभ्याम् | इदाभ्यः >आभ्यः |
| पञ्चमी | इदस्याः >अस्याः | आभ्याम् | आभ्यः |
| षष्ठी | इदस्याः > अस्याः | इदयोः > अनयोः/ एनयोः | इदासाम् > आसाम् |
| सप्तमी | इदस्याम् > अस्याम् | अनयोः/ एनयोः | इदासु > आसु |

इदम्+ स्(त्यदादीनामः > प्राप्ते)
इदम्+ स् (इदमो मः)
इयम् (हल्ङ्यादिलोपः)

इदम्+ औ
इद अ+ औ (त्यदादीनामः)
इद+ औ (अतो गुणे)
इदा+ औ (अजाद्यतष्टाप्)
इमा+ औ (दश्च)
इमा+ शी (औङ आपः)
इमे

इदा + आ
अन् आ+ आ
अन् ए+ आ (आङि चापः)
अनया

- सूत्रम्- यः सौ॥ (७,२.११०)
- सूत्रार्थः- इदमो दस्य यः स्यात्सौ। इयम्।
- त्यदाद्यत्वम्। पररूपत्वम्। टाप्। दश्चेति मः। इमे। इमाः। इमाम्। अनया।
- हलि लोपः। आभ्याम्। आभिः। अस्यै। अस्याः। अनयोः। आसाम्। अस्याम्। आसु॥

- सूत्रम्- इदमो मः॥ (७,२.१०८)
- सूत्रार्थः- (इदमो मस्य मः स्यात्) सौ।
- सूत्रम्- दश्च॥ (७,२.१०९)
- सूत्रार्थः- इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे।
- सूत्रम्- अनाप्यकः॥ (पदच्छेदः- अन् आपि अकः)
- सूत्रार्थः- अककारस्येदम इदोऽनापि विभक्तौ।
- सूत्रम्- हलि लोपः॥ (७,२.११३)
- सूत्रार्थः- अककारस्येदम इदो लोप आपि हलादौ।

❖ यः सौ ❖ दश्च ❖ अनाप्यकः ❖ हलि लोपः ❖ अन्वादेशपक्षे

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दकारान्तेषु 'त्यद्,तद्,एतद्' शब्दानां रूपाणि

त्यद्, तद्, एतद्= परोक्षवस्तुनिर्देशे, समीपतरवस्तुनिर्देशे

## लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|---|---|---|---|
| प्रथमा | स्या | त्ये | त्याः | सा | ते | ताः | एषा | एते | एताः |
| द्वितीया | त्याम् | त्ये | त्याः | ताम् | ते | ताः | एताम् | एते | एताः |
| तृतीया | त्यया | त्याभ्याम् | त्याभिः | तया | ताभ्याम् | ताभिः | एतया | एताभ्याम् | एताभिः |
| चतुर्थी | त्यस्यै | त्याभ्याम् | त्याभ्यः | तस्यै | ताभ्याम् | ताभ्यः | एतस्यै | एताभ्याम् | एताभ्यः |
| पञ्चमी | त्यस्याः | त्याभ्याम् | त्याभ्यः | तस्याः | ताभ्याम् | ताभ्यः | एतस्याः | एताभ्याम् | एताभ्यः |
| षष्ठी | त्यस्याः | त्ययोः | त्यासाम् | तस्याः | तयोः | तासाम् | एतस्याः | एतयोः | एतासाम् |
| सप्तमी | त्यस्याम् | त्ययोः | त्यासु | तस्याम् | तयोः | तासु | एतस्याम् | एतयोः | एतासु |

- ❖ त्यदाद्यत्वम्। टाप्। स्या। त्ये। त्याः॥
- ❖ एवं तद्, एतद्॥

त्यद्+ स्
त्य अ+ स्
त्य आ+ स्
स्या+ स्
स्या

तद्+ स्
स आ+ स्
सा

एतद्+ स्
ए स आ+ स्
एषा

❖ तदोः सः सावनन्त्ययोः

❖ औङ आपः— शी

❖ आङि चापः

❖ सर्वनाम्नः स्याड्ढ्रस्वश्च— स्याट्

# चकारान्तेषु ‘वाच्’ शब्दस्य रूपाणि (क्विँप्रत्ययान्तः)

वाच् = वाणी



| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.वाक् 2.वाग् | वाचौ | वाचः |
| सम्बोधनम् | हे 1.वाक् 2.वाग् | हे वाचौ | हे वाचः |
| द्वितीया | वाचम् | वाचौ | वाचः |
| तृतीया | वाचा | वाग्भ्याम् | वाग्भिः |
| चतुर्थी | वाचे | वाग्भ्याम् | वाग्भ्यः |
| पञ्चमी | वाचः | वाग्भ्याम् | वाग्भ्यः |
| षष्ठी | वाचः | वाचोः | वाचाम् |
| सप्तमी | वाचि | वाचोः | वाक्षु |

❖ चोः कुः । यथायथं जश्त्वं चर्त्वञ्च।

❖ वाक्, वाग् । वाचौ । वाग्भ्याम् । वाक्षु ॥

वाच् + स्
वाक् (चोः कुः)
वाग्-2 (झलां जशोऽन्ते)
वाक्-1 (वाऽवसाने)

वाच् + सु(प्)
वाक् + सु (चोः कुः)
वाग् + सु (झलां जशोऽन्ते)
वाग् + षु (आदेशप्रत्ययोः)
वाक् + षु (खरि च)
वाक्षु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पकारान्तेषु 'अप्' शब्दस्य रूपाणि (क्विँप्प्रत्ययान्तः)

अप् = जलम्

लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | बहुवचनम् |
| --- | --- |
| प्रथमा | आपः |
| सम्बोधनम् | हे आपः |
| द्वितीया | अपः |
| तृतीया | अद्भिः |
| चतुर्थी | अद्भ्यः |
| पञ्चमी | अद्भ्यः |
| षष्ठी | अपाम् |
| सप्तमी | अप्सु |

अप्+ अस्
आप्+ अस् (अप्तृन्तृ.....)
आपः (झलां जशोऽन्ते)

अप्+ भिस्
अत् + भिस् (अपो भि)
अद् + भिस् (झलां जशोऽन्ते)
अद्भिः

❖ अप्तृन्तृच्.....

❖ अपो भि।

❖ अप्शब्दो नित्यं बहुवचनान्तः।

(आपस्तथाऽसवो वर्षाः सिकताश्च दशाः समाः।
लाज-दार-गृह-प्राणाबहुत्वभागिनः सदा॥)

(सुमनस्)

❖ अप्तृन्निति दीर्घः। आपः। अपः॥

❖ सूत्रम्- अपो भि॥ (७,४.४८)

❖ सूत्रार्थः- अपस्तकारो भादौ प्रत्यये।

❖ अद्भिः। अद्भ्यः। अद्भ्यः। अपाम्। अप्सु॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# शकारान्तेषु 'दिश्' शब्दस्य रूपाणि (क्विँन्प्रत्ययान्तः)

दिश् = दिशा

लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.दिक् 2.दिग् | दिशौ | दिशः |
| सम्बोधनम् | हे 1.दिक् 2.दिग् | हे दिशौ | हे दिशः |
| द्वितीया | दिशम् | दिशौ | दिशः |
| तृतीया | दिशा | दिग्भ्याम् | दिग्भिः |
| चतुर्थी | दिशे | दिग्भ्याम् | दिग्भ्यः |
| पञ्चमी | दिशः | दिग्भ्याम् | दिग्भ्यः |
| षष्ठी | दिशः | दिशोः | दिशाम् |
| सप्तमी | दिशि | दिशोः | दिक्षु |

❖ (व्रश्चभ्रस्ज...), क्विँन्प्रत्ययस्य कुः । यथायथं जश्त्वं चर्त्वञ्च।

❖ दिक्, दिग् । दिशौ । दिशः । दिग्भ्याम् ॥

दिश्+ स्
दिष् (व्रश्चभ्रस्ज...)
दिड् (झलां जशोऽन्ते)
दिग्-2 (क्विँन्प्रत्ययस्य कुः)
दिक्-1 (वाऽवसाने)

दिश् + सु(प्)
दिष् + सु (व्रश्चभ्रस्ज...)
दिड् + सु (झलां जशोऽन्ते)
दिग् + सु (क्विँन्प्रत्ययस्य कुः)
दिग् + षु (आदेशप्रत्यययोः)
दिक् + षु (खरि च)
दिक्षु

# शकारान्तेषु ‘दृश्’ शब्दस्य रूपाणि (क्विँप्रत्ययान्तः)

दृश् = लोचनम् / दृष्टिः



| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.दृक् 2.दृग् | दृशौ | दृशः |
| सम्बोधनम् | हे 1.दृक् 2.दृग् | हे दृशौ | हे दृशः |
| द्वितीया | दृशम् | दृशौ | दृशः |
| तृतीया | दृशा | दृग्भ्याम् | दृग्भिः |
| चतुर्थी | दृशे | दृग्भ्याम् | दृग्भ्यः |
| पञ्चमी | दृशः | दृग्भ्याम् | दृग्भ्यः |
| षष्ठी | दृशः | दृशोः | दृशाम् |
| सप्तमी | दृशि | दृशोः | दृक्षु |

❖ (व्रश्चभ्रस्ज...), क्विँन्प्रत्ययस्य कुः । यथायथं जश्त्वं चर्त्वञ्च।

❖ प्रश्नः— ‘दृश्’ इत्यस्य क्विँप्रत्ययान्तत्वेऽपि ‘क्विँन्प्रत्ययस्य कुः’ इति सूत्रेण कथं कुत्वम् ?

❖ त्यदादिष्विति = ‘त्यदादिषु दृशोऽनालोचने कञ्च’ इति सूत्रेण दृशेः क्विँन्विधानाद् =‘क्विँन्प्रत्ययो यस्माद्’ दृष्ट इत्यर्थकस्य बहुव्रीहिस्वीकाराद् अन्यत्रापि= वर्त्तमाने क्विँन्-प्रत्ययस्य-अभावेऽपि कुत्वम्।

❖ दृक्, दृग्। दृशौ। दृग्भ्याम्॥

| | |
|---|---|
| दृश्+ स् | |
| दृष् | (व्रश्चभ्रस्ज...) |
| दृड् | (झलां जशोऽन्ते) |
| दृग्-2 | (क्विँन्प्रत्ययस्य कुः) |
| दृक्-1 | (वाऽवसाने) |

| | |
|---|---|
| दृश् + सु(प्) | |
| दृष् + सु | (व्रश्चभ्रस्ज...) |
| दृड् + सु | (झलां जशोऽन्ते) |
| दृग् + सु | (क्विँन्प्रत्ययस्य कुः) |
| दृग् + षु | (आदेशप्रत्यययोः) |
| दृक् + षु | (खरि च) |
| दृक्षु | |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# षकारान्तेषु 'त्विष्' शब्दस्य रुपाणि (क्विँप्प्रत्ययान्तः)

त्विष् = कान्तिः

लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.त्विट् 2. त्विड् | त्विषौ | त्विषः |
| सम्बोधनम् | हे1.त्विट् 2.त्विड् | हे त्विषौ | हे त्विषः |
| द्वितीया | त्विषम् | त्विषौ | त्विषः |
| तृतीया | त्विषा | त्विड्भ्याम् | त्विड्भिः |
| चतुर्थी | त्विषे | त्विड्भ्याम् | त्विड्भ्यः |
| पञ्चमी | त्विषः | त्विड्भ्याम् | त्विड्भ्यः |
| षष्ठी | त्विषः | त्विषोः | त्विषाम् |
| सप्तमी | त्विषि | त्विषोः | 1.त्विट्त्सु 2.त्विट्सु |

- ❖ त्विट्, त्विड् । त्विषौ । त्विड्भ्याम् ॥
- ❖ (पुँल्लिङ्गस्य 'रत्नमुष्'शब्दवत्)
- ❖ एवं प्रावृष्, रुष् इत्यादः

त्विष् + स्
त्विड्-2 (झलां जशोऽन्ते)
त्विट्-1 (वाऽवसाने)

त्विष् + सु(प्)
त्विड् + सु (झलां जशोऽन्ते)
त्विड् + ध् सु (डः सि धुँट्)
त्विट् + त् सु (खरि च)
1.त्विट्त्सु
2.त्विट्सु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# षकारान्तेषु ‘सजुष्-आशिष्’ शब्दस्य रुपाणि (क्विँप्प्रत्ययान्तः)

सजुष्, आशिष् = मित्रम्, आशीर्वादः

लघुसिद्धान्तकौमुद्याम् (हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सजूः | सजुषौ | सजुषः |
| सम्बोधनम् | हे सजूः | हे सजुषौ | हे सजुषः |
| द्वितीया | सजुषम् | सजुषौ | सजुषः |
| तृतीया | सजुषा | सजूर्भ्याम् | सजूर्भिः |
| चतुर्थी | सजुषे | सजूर्भ्याम् | सजूर्भ्यः |
| पञ्चमी | सजुषः | सजूर्भ्याम् | सजूर्भ्यः |
| षष्ठी | सजुषः | सजुषोः | सजुषाम् |
| सप्तमी | सजुषि | सजुषोः | 1. सजूःषु<br>2. सजूष्षु |

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | आशीः | आशिषौ | आशिषः |
| सम्बोधनम् | हे आशीः | हे आशिषौ | हे आशिषः |
| द्वितीया | आशिषम् | आशिषौ | आशिषः |
| तृतीया | आशिषा | आशीर्भ्याम् | आशीर्भिः |
| चतुर्थी | आशिषे | आशीर्भ्याम् | आशीर्भ्यः |
| पञ्चमी | आशिषः | आशीर्भ्याम् | आशीर्भ्यः |
| षष्ठी | आशिषः | आशिषोः | आशिषाम् |
| सप्तमी | आशिषि | आशिषोः | 1.आशीःषु<br>2.आशीष्षु |

❖ ससजुषो रुँरिति रुँत्वम्। सजूः। सजुषौ। सजूर्भ्याम्॥

❖ आशीः। आशिषौ। आशीर्भ्याम्॥

सजुष् + स् (स-सजुषो रुँः)
सजुर् (र्वोरुधाया दीर्घ इकः)
सजूः

सजुष् + सु (स-सजुषो रुँः) (र्वोरुधाया दीर्घ इकः)
सजूर् + सु (खरवसानयोर्विसर्जनीयः) (वा शरि)
सजूः + सु (नुँम्विसर्जनीयः शर्व्यवायेऽपि) 1. सजूःषु 2. सजूष्षु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सकारान्तेषु ‘अदस्’ शब्दस्य रूपाणि

अदस् = प्रत्यक्षे बहुदूरे

लघुसिद्धान्तकौमुद्याम्
(हलन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अदौ > असौ | अदे > अमू | अदाः > अमूः |
| द्वितीया | अदाम् > अमूम् | अदे > अमू | अदाः > अमूः |
| तृतीया | अदया > अमुया | अदाभ्याम् > अमूभ्याम् | अदाभिः > अमूभिः |
| चतुर्थी | अदस्यै > अमुष्यै | अदाभ्याम् > अमूभ्याम् | अदाभ्यः > अमूभ्यः |
| पञ्चमी | अदस्याः > अमुष्याः | अदाभ्याम् > अमूभ्याम् | अदाभ्यः > अमूभ्यः |
| षष्ठी | अदस्याः > अमुष्याः | अदयोः > अमुयोः | अदासाम् > अमूषाम् |
| सप्तमी | अदस्याम् > अमुष्याम् | अदयोः > अमुयोः | अदासु > अमूषु |

- ❖ असौ। उत्वमत्वे। अमू। अमूः। अमुया। अमूभ्याम् ३। अमूभिः। अमुष्यै। अमूभ्यः २। अमुष्याः। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु॥
- ❖ (अप्सरस्,उषस्, सुमनस् एते सर्वे पुँल्लिङ्गस्य वेधस्शब्दवत्)

॥ इति हलन्तस्त्रीलिङ्गाः ॥

✓ *सुँ-विभक्तिं विहाय त्यदादित्व-पररूपकार्यानन्तरं टापि कृते सर्वासु विभक्तिषु ‘सर्वा’शब्दवत्प्रक्रिया ज्ञेया।*

अदस् + स् (त्यदादीनामः > प्राप्ते)
अद औ + स् (अदस औ सुलोपश्च)
अद औ + (वृद्धिरेचि)
अदौ (अदसोऽसेर्दादु दो मः > प्राप्ते)
असौ (तदोः सः सावनन्त्योः)

अदस् + औ
अदा + औ (त्यदादित्वं पररूपम्)
अदा + ई (अजाद्यतष्टाप्)
अदे (आद्गुणः)
अमू (अदसोऽसेर्दादु दो मः)

- ❖ अदस औ सुँलोपश्च।
- ❖ तदोः सः सावनन्त्योः।

- ❖ अदसोऽसेर्दादु दो मः

**1. नहो हस्य.............स्यात्.........पदान्ते च। रिक्तस्थानानि पूरयत—**

क. धः, पदान्ते

ख. ढः, झलि

**ग. धः, झलि**

घ. लोपः , झलि

**2. 'उपानद्' इत्यत्र दीर्घविधायकं सूत्रं किम् ?**

क. सुपि च

ख. सर्वनामस्थाने चासम्बुद्धौ

ग. अकः सवर्णे दीर्घः

**घ. नहिवृतिवृषि.........**

**3. सूत्रस्य शुद्धं स्वरूपं चिनुत ?**

क. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्नौ

ख. नहिवृतिवृषिव्धिरुचिसहितनिषु क्वौँ

ग. नहिवृतिवृषिव्यधिरुचिसहिनिषु क्वौँ

**घ. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ**

**4. 'उप+ नह्+ सु' इत्यवस्थायां पूर्वपदस्य दीर्घे हस्य धत्वे जश्त्वे चर्त्वे च कृते किं रूपं सिद्ध्यति ?**

क. उपानत्, उपानद्

ख. उपानत्

ग. उपानत्, उपानत्सु

**घ. उपानत्सु**

**5. हकारस्य कुत्वं भवति ?**

क. घकारः

ख. खकारः

ग. धकारः

घ. ककारः

**6. एतेष्वस्य प्रयोगः केवलं स्त्रीलिङ्गे भवति —**

क. सुदिव्

**ख. दिव्**

ग. तद्

घ. चतुर्

**7. स्त्रीलिङ्गे इदं रूपं न भवति ?**

क. का

ख. काः

ग. के

**घ. कौ**

**8. एतेषु असङ्गतं चिनुत—**

क. 'पुर्'शब्दस्य रूपाणि 'गिर्'शब्दवद्भवन्ति।

ख. किम्-शब्दस्य रूपाणि स्त्रीलिङ्गे सर्वाशब्दवद्भवन्ति।

**ग. 'यः सौ' इति सूत्रेण इदमो दकारस्य यत्वे 'इयम्' इति रूपं न सिद्ध्यति।**

घ. स्या इति रूपं त्यद्शब्दस्य अस्ति।

**9. एतेषु क्विँन्नत्वात्कुत्वं कस्य भवति ?**

क. उपानह्

**ख. उष्णिह्**

ग. पुर्

घ. दृश्

**10. प्र+वृष् इत्यस्य प्रथमैकवचने किं रूपम् ?**

क. प्रवृष्

ख. प्रावृट्

ग. प्रावृष्

**घ. प्रावृट्-ड्**

**11. 'इदम्'शब्दात् त्यदादित्वे पररूपे टापि च कृते 'इदा' इत्यवस्थायां दस्य मत्वे द्विवचने किं रूपं भवति?**

क. इमौ

**ख. इमे**

ग. आभ्याम्

घ. इमाः

**12. षष्ठीबहुवचने इदं रूपं न भवति ?**

क. आसाम्

ख. दिवाम्

ग. अपाम्

**घ. अस्याम्**

**13. 'एषा' इत्यत्र तकारस्य सकारादेशः केन सूत्रेण भवति ?**

क. आदेशप्रत्यययोः

ख. यः सौ

**ग. तदोः सः सावनन्त्ययोः**

घ. एतत्तदोः सुँलोपोऽकोरनञ्समासे हलि

**14. कुत्र 'त्यदादीनामः' सूत्रं प्रवर्त्तते ?**

क. इयम्

ख. का

ग. असौ

**घ. सा**

**15. एतेषु 'तदोः सः सावनन्त्ययोः' इति सूत्रं कुत्र न प्रवर्त्तते ?**

क. एषा

ख. असौ

ग. सा

**घ. आशिषा**

**16. असङ्गतं कथनं चिनुत—**

क. अप्शब्दो नित्यं बहुवचनान्तः

ख. 'आप्' इत्यत्र 'अप्तृन्तृच्....' सूत्रेण दीर्घो भवति ?

ग. अप्स्तकारः स्याद् भादौ प्रत्यये परे।

**घ. 'अपः' इति रूपं प्रथमा-बहुवचने।**

**17. 'वाक्षु' इत्यस्य समीचीना प्रक्रियास्ति—**

**क. 'वाच्+ सु' इत्यत्र 'चो कु'रिति कुत्वे ककारे जश्त्वे षत्वे चर्त्वे च कृते सिद्धम्।**

ख. 'वाक्+ सु' इत्यत्र 'चो कु'रिति कुत्वे ककारे जश्त्वे षत्वे चर्त्वे च कृते सिद्धम्।

ग. 'वाच्+ सुप्' इत्यत्र 'क्विँन्प्रत्ययस्य कु'रिति कुत्वे ककारे जश्त्वे षत्वे चर्त्वे च कृते सिद्धम्।

घ. 'वाच्+ सु' इत्यत्र 'चो कु'रिति कुत्वे ककारे जश्त्वे षत्वे वैकल्पिकचर्त्वे च कृते सिद्धम्।

**18. 'दिक्-दिग्' इत्यादीनां मूलं प्रातिपदिकं किम् ?**

क. दिष्

**ख. दिश्**

ग. दिच्

घ. दिक्

**19. 'दृक्-ग्' अत्र कुत्वं केन सूत्रेण ?**

क. चो कुः

ख. क्विँप्प्रत्ययस्य कुः

ग. खरि च

**घ. क्विँन्प्रत्ययस्य कुः**

**20. 'त्यदादिष्विति दृशेः क्विँन्विधानादन्यत्रापि कुत्वम्' इति पङ्क्तेर्भावं चिनुत —**

क. 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रेण अन्यार्थेषु क्विँन्विधानं कृतमतोऽत्रापि कुत्वं भवति।

**ख. त्यदादिषु... इति सूत्रे क्विँन्प्रत्ययो यस्माद्दृष्ट इत्यर्थस्वीकारात् तादृगित्यत्र दृशेः कुत्वस्य दृष्टत्वाद्दृग्- इत्यत्रापि कुत्वं भवति।**

ग. त्यदादिषु... इति सूत्रे बहुव्रीहिसमासस्वीकाराद् अत्र दृशेः क्विँन्-प्रत्ययान्तत्वादपि कुत्वं भवत्येव।

घ. 'तादृश्' इत्यत्र दृशे चो कुरिति कुत्वं दृष्टम् अत एव अन्यत्रापि= वर्तमाने क्विँन्प्रत्ययस्याभावेऽपि क्विँन्प्रत्ययस्य कुरित्यनेनैव कुत्वं भवति।

**21. 'त्विट्'शब्दस्य कोऽर्थः ?**

क. त्वक्

ख. लोचनम्

ग. इन्द्रः

**घ. कान्तिः**

**22. 'सजुष्+ स्' इत्यत्र सकारलोपे कृते षकारस्य रुँत्वे 'र्वोरुपधाया दीर्घ इकः' इत्यनेन उपधादीर्घे............सिद्धम्।**

**क. सजूः**

ख. सजुः

ग. सजुषः

घ. सर्जूः

**23. स्त्रीलिङ्गे अदस्शब्दस्य ईत्वं मत्वञ्च कुत्र भवति ?**

क. शसं विहाय बहुवचनेषु

ख. तृतीयैकवचने

ग. बहुवचनेषु

**घ. कुत्रापि न**

**24. पुँल्लिङ्ग-स्त्रीलिङ्गयोः 'अदस्'शब्दस्य कतिषु स्थानेषु समानं रूपं भवति ?**

**क. ८**

ख. ९

ग. ७

घ. १०

**25. स्त्रीलिङ्गे इदं रूपं नास्ति—**

क. अमूषाम्

ख. अमुष्याम्

ग. अमूः

**घ. अमीषाम्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हलन्ते नपुंसकलिङ्गाः

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| ह् | र् | म् | न् | ज् | द् | च् | त् | ष् | स् |
|---|---|---|---|---|---|---|---|---|---|
| १.स्वनडुह् | १.वार्<br>२.चतुर् | १.किम्<br>२.इदम् | १.अहन्<br>२.दण्डिन्<br>३.सुपथिन् | १.ऊर्ज् | १.तद्<br>२.यद्<br>३.एतद् | १.गो अञ्च् | १.शकृत्<br>२.ददत्<br>३.तुदत्<br>४.पचत्<br>५.दीव्यत् | १.धनुष्<br>२.चक्षुष्<br>३.हविष् | १.पयस्<br>२.सुपुंस्<br>३.अदस् |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# हकारान्तेषु ‘स्वनडुह्’शब्दस्य रूपाणि

स्वनडुह् = सुष्ठु वृषभा यस्य तत् कुलं क्षेत्रं वा।

लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.स्वनडुत् 2.स्वनडुद् | स्वनडुही | स्वनड्वांहि |
| सम्बोधनम् | ” | ” | ” |
| द्वितीया | ” | ” | ” |
| तृतीया | स्वनडुहा | स्वनडुद्भ्याम् | स्वनडुद्भिः |
| चतुर्थी | स्वनडुहे | स्वनडुद्भ्याम् | स्वनडुद्भ्यः |
| पञ्चमी | स्वनडुहः | स्वनडुद्भ्याम् | स्वनडुद्भ्यः |
| षष्ठी | स्वनडुहः | स्वनडुहोः | स्वनडुहाम् |
| सप्तमी | स्वनडुहि | स्वनडुहोः | स्वनडुत्सु |

❖ स्वमोर्लुक्। दत्वम्। स्वनडुत्, स्वनडुद्। स्वनडुही। चतुरनडुहोरित्याम्। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्॥

- ❖ सूत्रम्- स्वमोर्नपुंसकात्॥ (७,१.२३)
- ❖ सूत्रार्थः- (क्लीबाद् अङ्गात् परयोः स्वमोः) लुक् स्यात्।
- ❖ सूत्रम्- नपुंसकाच्च॥ (७,१.१९)
- ❖ सूत्रार्थः- क्लीबादौङः शी स्यात्।
- ❖ सूत्रम्- जश्शसोः शिः॥ (७,१.२०)
- ❖ सूत्रार्थः- क्लीबादनयोः शिः स्यात्॥
- ❖ सूत्रम्- चतुरनडुहोरामुदात्तः॥ (७,१.९८)
- ❖ सूत्रार्थः- अनयोराम् स्यात्सर्वनामस्थाने परे॥
- ❖ सूत्रम्- वसुँस्रंसुँध्वंस्वनडुहां दः॥ (८,२.७२)
- ❖ सूत्रार्थः- सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते।

❖ वसुँस्रंसुँध्वंस्वनडुहां दः। सप्तम्यां बहुवचने चर्त्वम्।

स्वनडुह् + जस्
स्वनडुह् + शि
स्वनडु आ न् ह् + इ (चतुरनडुहोरामुदात्तः, नपुंसकस्य झलचः)
स्वनड्वांहि (इको यणचि, नश्चापदान्तस्य झलि)

स्वनडुह् + स् (हल्ङ्याभ्यो...प्राप्ते, स्वमोर्नपुंसकात्)
स्वनडुह्
स्वनडुद्-2 (वसुँस्रंसुँध्वंस्वनडुहां दः)
स्वनडुत्-1 (वाऽवसाने)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रेफान्तेषु 'वार्'शब्दस्य रूपाणि

वार् = जलम्

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | वाः | वारी | वारि |
| सम्बोधनम् | हे ,, | हे ,, | हे ,, |
| द्वितीया | ,, | ,, | ,, |
| तृतीया | वारा | वार्भ्याम् | वार्भिः |
| चतुर्थी | वारे | वार्भ्याम् | वार्भ्यः |
| पञ्चमी | वारः | वार्भ्याम् | वार्भ्यः |
| षष्ठी | वारः | वारोः | वाराम् |
| सप्तमी | वारि | वारोः | वार्षु |

❖ वाः। वारी। वारि। वार्भ्याम्॥

वार् + स् (हल्ङ्याभ्यो...प्राप्ते, स्वमोर्नपुंसकात्)
वार्
वाः

वार् + औ
वार् + ई (शी)
वारी

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# रेफान्तेषु ‘चतुर्’शब्दस्य रूपाणि

चतुर् = चतुर्त्वसङ्ख्याविशेषः

लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | चत्वारि |
| द्वितीया | चत्वारि |
| तृतीया | चतुर्भिः |
| चतुर्थी | चतुर्भ्यः |
| पञ्चमी | चतुर्भ्यः |
| षष्ठी | चतुर्ण्णाम् चतुर्णाम् |
| सप्तमी | चतुर्षु |

चतुर्+ जस् (चतुरनडुहोरामुदात्तः)

चतु आ र्+ इ (शि)

चत्वारि

- चत्वारि॥ (पुनस्तद्वत्) (शेषं पुंवत्)

- सूत्रम्- षट्चतुर्भ्यश्च॥ (७,१.५५)
- सूत्रार्थः- एभ्य आमो नुँडागमः॥
- सूत्रम्- रषाभ्यां नो णः समानपदे॥ (८,४.१)
- सूत्रार्थः- (रेफषकाराभ्यां परस्य नस्य णः स्यादेकपदे।) (अचो रहाभ्यां द्वे॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः।)
- चतुर्ण्णाम्, चतुर्णाम्॥
- सूत्रम्- रोः सुपि॥ (८,३.१६)
- सूत्रार्थः- रोरेव विसर्गः सुपि। षत्वम्। षस्य द्वित्वे प्राप्ते॥
- सूत्रम्- शरोऽचि॥ (८,४.४९)
- सूत्रार्थः- अचि परे शरो न द्वे स्तः। चतुर्षु॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु 'किम्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | किम् | के | कानि |
| द्वितीया | किम् | के | कानि |
| तृतीया | केन | काभ्याम् | कैः |
| चतुर्थी | कस्मै | काभ्याम् | केभ्यः |
| पञ्चमी | कस्मात्-द् | काभ्याम् | केभ्यः |
| षष्ठी | कस्य | कयोः | केषाम् |
| सप्तमी | कस्मिन् | कयोः | केषु |

❖ किम्। के। कानि॥(पुनस्तद्वत्) (शेषं पुंवत्)

किम् + स् (हल्ङ्याभ्यो...प्राप्ते, स्वमोर्नपुंसकात्)
किम् ('न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् विभक्तिपरत्वाभावात् 'किमः कः' इति सूत्रेण कादेशो न)

किम् + औ (किमः कः)
क + ई (नपुंसकाच्च— शी)
के (आद्गुणः)

किम् + जस् (किमः कः)
क + इ (जश्शसोः शि— शि)
कन् + इ (नपुंसकस्य झलचः— नुँम्)
कान् + इ (सर्वनामस्थाने चासम्बुद्धौ— उपधादीर्घः)
कानि

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# मकारान्तेषु ‘इदम्’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | इदम् | इमे | इमानि |
| द्वितीया | इदम्, एनत्-द् | इमे, एने | इमानि,एनानि |
| तृतीया | अनेन, एनेन | आभ्याम् | एभिः |
| चतुर्थी | अस्मै | आभ्याम् | एभ्यः |
| पञ्चमी | अस्मात्-द् | आभ्याम् | एभ्यः |
| षष्ठी | अस्य | अनयोः, एनयोः | एषाम् |
| सप्तमी | अस्मिन् | अनयोः, एनयोः | एषु |

❖ अनाप्यकः

❖ हलि लोपः।

❖ इदम्। इमे। इमानि॥

❖ (अन्वादेशे नपुंसके वा एनद्वक्तव्यः)।
एनत्-द्। एने। एनानि। एनेन। एनयोः-२॥
(पुनस्तद्वत्) (शेषं पुंवत्)

इदम् + औ (त्यदादित्वं पररूपञ्च)
इद + ई (नपुंसकाच्च— शी)
इमे (दश्च)

इदम् + जस् (त्यदादित्वं पररूपञ्च)
इद + इ (जश्शसोः शि— शि)
इदन् + इ (नपुंसकस्य झलचः— नुँम्)
इदान् + इ (सर्वनामस्थाने चासम्बुद्धौ— उपधादीर्घः)
इमानि (दश्च)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु ‘अहन्’शब्दस्य रूपाणि

अहन् = दिनम्

लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अहः | अह्नी, अहनी | अहानि |
| सम्बोधनम् | हे अहः | हे अह्नी, अहनी | हे अहानि |
| द्वितीया | अहः | अह्नी, अहनी | अहानि |
| तृतीया | अह्ना | अहोभ्याम् | अहोभिः |
| चतुर्थी | अह्ने | अहोभ्याम् | अहोभ्यः |
| पञ्चमी | अह्नः | अहोभ्याम् | अहोभ्यः |
| षष्ठी | अह्नः | अह्नोः | अह्नाम् |
| सप्तमी | अह्नि, अहनि | अह्नोः | अहःसु, अहस्सु |

❖ रोऽसुँपि ❖ विभाषा ङिश्योः ❖ अल्लोपोऽनः ❖ अहन्

❖ अहः। विभाषा ङिश्योः। अह्नी, अहनी। अहानि॥
❖ सूत्रम्— अहन्॥ (८,२. ६८)
❖ सूत्रार्थः— अहन्नित्यस्य रुँः (स्यात्) पदान्ते।
अहोभ्याम्॥

अहन् + स् (स्वमोर्नपुंसकात्)
अहर् (रोऽसुँपि— रेफादेशः)
अहः

अहन् + जस्
अहान् + इ (सर्वनामस्था.... )
अहानि

अहन् + भ्याम्
अहर् + भ्याम् (अहन्)
अह उ + भ्याम् (हशि च)
अहोभ्याम्

अहन् + औ (भसंज्ञा)
अहन् + ई (विभाषा ङिश्योः)
अह् न् + ई
1. अह्नी 2.अहनी

अहन् + आ (भसंज्ञा)
अह् न् + आ (अल्लोपोऽनः)
अह्ना

अहन् + सु (प)
अहर् + सु (वा शरि)
1.अहःसु, 2.अहस्सु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'दण्डिन्'शब्दस्य रूपाणि

दण्डिन् = दण्डोऽस्यस्तीति तत्कुलं दण्डि

लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | दण्डि | दण्डिनी | दण्डीनि |
| सम्बोधनम् | हे दण्डि, दण्डिन् | हे दण्डिनी | हे दण्डीनि |
| द्वितीया | दण्डि | दण्डिनी | दण्डीनि |
| तृतीया | दण्डिना | दण्डिभ्याम् | दण्डिभिः |
| चतुर्थी | दण्डिने | दण्डिभ्याम् | दण्डिभ्यः |
| पञ्चमी | दण्डिनः | दण्डिभ्याम् | दण्डिभ्यः |
| षष्ठी | दण्डिनः | दण्डिनोः | दण्डिनाम् |
| सप्तमी | दण्डिनि | दण्डिनोः | दण्डिषु |

- ❖ दण्डि॥
- ❖ वार्तिकम्— सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः
- ❖ अर्थः— सम्बुद्धौ परतः नपुंसकलिङ्गे नकारस्य लोपः विकल्पेन भवति।
- ❖ दण्डिनी। दण्डीनि। दण्डिना। दण्डिभ्याम्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# नकारान्तेषु 'सुपथिन्' शब्दस्य रूपाणि

सुपथिन्= शोभनमार्गाणां नगरम्

लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुपथि | सुपथी | सुपन्थानि |
| सम्बोधनम् | हे सुपथि, सुपथिन् | हे सुपथी | हे सुपन्थानि |
| द्वितीया | सुपथि | सुपथी | सुपन्थानि |
| तृतीया | सुपथा | सुपथिभ्याम् | सुपथिभिः |
| चतुर्थी | सुपथे | सुपथिभ्याम् | सुपथिभ्यः |
| पञ्चमी | सुपथः | सुपथिभ्याम् | सुपथिभ्यः |
| षष्ठी | सुपथः | सुपथोः | सुपथाम् |
| सप्तमी | सुपथि | सुपथोः | सुपथिषु |

❖ सुपथि। टेर्लोपः। सुपथी। सुपन्थानि॥

सुपथिन् + औ
सुपथिन् + ई (भस्य टेर्लोपः)
सुपथ् + ई
सुपथी

सुपथिन् + जस्
सुपथन् + इ (इतोऽत्सर्वनामस्थाने— अ)
सुपन्थन् + इ (थो न्थ)
सुपन्थान् + इ (उपधादीर्घः)
सुपन्थानि

# जकारान्तेषु ‘ऊर्ज्’शब्दस्य रूपाणि

ऊर्ज्= बलं तेजश्च



| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.ऊर्क्, 2.ऊर्ग् | ऊर्जी | ऊन्र्जि |
| सम्बोधनम् | हे 1.ऊर्क्, 2.ऊर्ग् | हे ऊर्जी | हे ऊन्र्जि |
| द्वितीया | 1.ऊर्क्, 2.ऊर्ग् | ऊर्जी | ऊन्र्जि |
| तृतीया | ऊर्जा | ऊर्ग्भ्याम् | ऊर्ग्भिः |
| चतुर्थी | ऊर्जे | ऊर्ग्भ्याम् | ऊर्ग्भ्यः |
| पञ्चमी | ऊर्जः | ऊर्ग्भ्याम् | ऊर्ग्भ्यः |
| षष्ठी | ऊर्जः | ऊर्जोः | ऊर्जाम् |
| सप्तमी | ऊर्जि | ऊर्जोः | ऊर्क्षु |

- ❖ ऊर्क्, ऊर्ग्। ऊर्जी।
- ❖ (ऊन्र्जि/ ऊन्र्र्जि/ ऊञ्जि / ऊन्र्जि।) नरजानां संयोगः।

ऊर्ज् + स्
ऊर्ग्-2 (चोः कुः)
ऊर्क्-1 (वाऽवसाने)

ऊर्ज् + जस्
ऊन् र्ज् + शि (नपुंसकस्य झलचः)
ऊन् र्ज् + इ

- ❖ चोः कुः, वाऽवसाने
- ❖ नपुंसकस्य झलचः
- ❖ चोः कुः
- ❖ चोः कुः, आदेशप्रत्यययोः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दकारान्तेषु 'तद्-यद्-एतद्'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|---|---|---|---|
| प्रथमा | तत्, तद् | ते | तानि | यत्, यद् | ये | यानि | एतत्, एतद् | एते | एतानि |
| द्वितीया | तत्, तद् | ते | तानि | यत्, यद् | ये | यानि | एतत्, एतद् | एते | एतानि |
| तृतीया | तेन | ताभ्याम् | तैः | येन | याभ्याम् | यैः | एतेन | एताभ्याम् | एतैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः | यस्मै | याभ्याम् | येभ्यः | एतस्मै | एताभ्याम् | एतेभ्यः |
| पञ्चमी | तस्मात्-द् | ताभ्याम् | तेभ्यः | यस्मात्-द् | याभ्याम् | येभ्यः | एतस्मात्-द् | एताभ्याम् | एतेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् | यस्य | ययोः | येषाम् | एतस्य | एतयोः | एतेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु | यस्मिन् | ययोः | येषु | एतस्मिन् | एतयोः | एतेषु |

तद् + स्
तद्-2
तत्-1 (वाऽवसाने)

तद् + औ (त्यदादीनामः, अतो गुणे)
त + शी (नपुंसकाच्च)
ते

तद् + जस् (त्यदादीनामः, अतो गुणे)
तन् + शि (जश्शसोः शि,नुँम्, उपधादीर्घः)
तान् + इ= तानि

- ❖ तत्। ते। तानि॥
- ❖ यत्। ये। यानि॥
- ❖ एतत्। एते। एतानि॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# चकारान्तेषु 'गो+अच्'शब्दस्य रूपाणि

गवाक् = गोरनुसरणकर्ता (कुलम्)

लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.गवाक्, 2.गवाग् | गोची | गवाञ्चि |
| सम्बोधनम् | हे 1.गवाक्, 2.गवाग् | हे गोची | हे गवाञ्चि |
| द्वितीया | 1.गवाक्, 2.गवाग् | गोची | गवाञ्चि |
| तृतीया | गोचा | गवाग्भ्याम् | गवाग्भिः |
| चतुर्थी | गोचे | गवाग्भ्याम् | गवाग्भ्यः |
| पञ्चमी | गोचः | गवाग्भ्याम् | गवाग्भ्यः |
| षष्ठी | गोचः | गोचोः | गोचाम् |
| सप्तमी | गोचि | गोचोः | गवाक्षु |

❖ चोः कुः, जश्त्वम् , यथायथं चर्त्वम्

❖ नपुंसकस्य झलचः

❖ अचः

❖ गवाक्, गवाग्। गोची। गवाञ्चि। पुनस्तद्वत्। गोचा। गवाग्भ्याम्॥

गो + अच् + स्
गो + अक् (चोः कुः)
2.गो + अग् (जश्त्वम्)
1.गो + अक् (वाऽवसाने)
1.गवाक् 2.गवाग्
(अवङ् स्फोटायनस्य, सवर्णदीर्घः)

गो + अच् + औ
गो + च् +ई (अचः)
गोची

गो + अच् + जस्
गो + अ न् च् + इ
गो + अ ञ् च् + इ
ग् अव + अ ञ् च् + इ
गवाञ्चि

गो + अच् + सु
गो + अक् + सु
गो + अग् + सु
गो + अक् + सु
गो + अक् + षु
ग् अव + अक्षु
गवाक्षु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तकारान्तेषु ‘शकृत्’शब्दस्य रूपाणि

शकृत् = विष्ठा

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.शकृत्, 2.शकृद् | शकृती | शकृन्ति |
| सम्बोधनम् | हे 1.शकृत्, 2.शकृद् | हे शकृती | हे शकृन्ति |
| द्वितीया | 1.शकृत्, 2.शकृद् | शकृती | शकृन्ति |
| तृतीया | शकृता | शकृद्भ्याम् | शकृद्भिः |
| चतुर्थी | शकृते | शकृद्भ्याम् | शकृद्भ्यः |
| पञ्चमी | शकृतः | शकृद्भ्याम् | शकृद्भ्यः |
| षष्ठी | शकृतः | शकृतोः | शकृताम् |
| सप्तमी | शकृति | शकृतोः | शकृत्सु |

❖ जश्त्वम् , यथायथं चर्त्वम्

❖ नपुंसकस्य झलचः

❖ शकृत्। शकृती। शकृन्ति॥
❖ ददत्॥
❖ सूत्रम्— वा नपुंसकस्य॥ (७,१.७९)
❖ अर्थः— अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने।
❖ ददन्ति, ददति॥

शकृत्+ स्
शकृद्-2
शकृत्-1 (वाऽवसाने)

शकृत्+ जस्
शकृत्+ इ
शकृन् त्+ इ
शकृन्ति

ददत्+ जस्
ददत्+ इ (नाभ्यस्ताच्छतुः- नुँम्निषेधे)
दद न् त्+ इ (वा नपुंसकस्य)
1.ददन्ति 2.ददति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

# तकारान्तानां भेदाः

तत्र नुँम्-व्यवस्थापनम्

## १.शकृत्

‘शि’ नित्यं नुँम्

सामान्य शत्रन्ताः
यथा— कुर्वत्, जगत्....

## २.ददत्

‘शि’ वा नुँम्

अभ्यस्तसञ्ज्ञकशत्रन्ताः यथा—
ददत्, दधत्, जुह्वत्.........

## ३.दीव्यत्

‘शी,शि’ नित्यं नुँम्

शप्-श्यन्विकरणशत्रन्ताः यथा—
भवत्, पठत् दीव्यत्, चोरयत्.....

## ४.तुदत्

‘शी’ वा नुँम्
‘शि’ नित्यं नुँम्

1.तुदादेः शत्रन्ताः।
2.अदादेः आकारान्त शत्रन्ताः।
3.लृँट्लकारस्य सर्वे शत्रन्ताः।
यथा—
तुदत् यात्, भविष्यत् करिष्यत्....

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तकारान्तेषु 'तुदत्'शब्दस्य रूपाणि

तुदत् = व्यथ्यमानं कुलम्

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | 1.तुदत्, 2. तुदद् | 1.तुदन्ती, 2.तुदती | तुदन्ति |
| सम्बोधनम् | हे 1.तुदत्, 2. तुदद् | हे 1.तुदन्ती, 2.तुदती | हे तुदन्ति |
| द्वितीया | 1.तुदत्, 2. तुदद् | 1.तुदन्ती, 2.तुदती | तुदन्ति |
| तृतीया | तुदता | तुदद्भ्याम् | तुदद्भिः |
| चतुर्थी | तुदते | तुदद्भ्याम् | तुदद्भ्यः |
| पञ्चमी | तुदतः | तुदद्भ्याम् | तुदद्भ्यः |
| षष्ठी | तुदतः | तुदतोः | तुदताम् |
| सप्तमी | तुदति | तुदतोः | तुदत्सु |

- ❖ जश्त्वम् , यथायथं चर्त्वम्
- ❖ नपुंसकस्य झलचः

- ❖ तुदत् ॥
- ❖ सूत्रम्— आच्छीनद्योर्नुम्॥ (७,१.८०)
- ❖ अर्थः— अवर्णान्तादङ्गात्परो यः शतुरवयस्तदन्तस्य नुँम् वा शीनद्योः।
- ❖ तुदन्ती, तुदती। तुदन्ति॥
- ❖ सूत्रम्— शप्श्यनोर्नित्यम्॥ (७,१.८१)
- ❖ अर्थः— शप्श्यनोरात्परो यः शतुरवयव-स्तदन्तस्य नित्यं नुँम् शीनद्योः।
- ❖ पचन्ती। पचन्ति।
- ❖ दीव्यत्। दीव्यन्ती। दीव्यन्ति॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# षकारान्तेषु ‘धनुष्’शब्दस्य रूपाणि

धनुः = चापः

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथमा | धनुः | धनुषी | धनूंषि |
| सम्बोधनम् | हे धनुः | हे धनुषी | हे धनूंषि |
| द्वितीया | धनुः | धनुषी | धनूंषि |
| तृतीया | धनुषा | धनुर्भ्याम् | धनुर्भिः |
| चतुर्थी | धनुषे | धनुर्भ्याम् | धनुर्भ्यः |
| पञ्चमी | धनुषः | धनुर्भ्याम् | धनुर्भ्यः |
| षष्ठी | धनुषः | धनुषोः | धनुषाम् |
| सप्तमी | धनुषि | धनुषोः | 1.धनुःषु<br>2.धनुष्षु |

- ❖ धनुः। धनुषी। सान्तेति दीर्घः। नुँम्विसर्जनीयेति षः। धनूंषि। धनुषा। धनुर्भ्याम्।
- ❖ एवं चक्षुर्हविरादयः॥ (चक्षुष्, हविष्)

धनुष्+ स्
धनुष्+ (ससजुषो रुँः)
धनुर्= धनुः

धनुष्+ सुप्
धनुर्+ सु (वा शरि)
धनुः+ षु= धनुःषु, धनुष्षु

धनुष्+ जस्
धनुष्+इ
धनुन् स् +इ (नपुंसकस्य झलचः)
धनून् स्+इ (सान्तमहतः संयोगस्य)
धनूं स्+इ (नश्चापदान्तस्य झलि)
धनूं ष्+इ (नुँम्विसर्जनीयशर्व्यवायेऽपि)
धनूंषि

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सकारान्तेषु 'पयस्'शब्दस्य रूपाणि

पयस् = जलं दुग्धं वा

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | पयः | पयसी | पयांसि |
| सम्बोधनम् | हे पयः | हे पयसी | हे पयांसि |
| द्वितीया | पयः | पयसी | पयांसि |
| तृतीया | पयसा | पयोभ्याम् | पयोभिः |
| चतुर्थी | पयसे | पयोभ्याम् | पयोभ्यः |
| पञ्चमी | पयसः | पयोभ्याम् | पयोभ्यः |
| षष्ठी | पयसः | पयसोः | पयसाम् |
| सप्तमी | पयसि | पयसोः | 1.पयःसु<br>2.पयस्सु |

❖ पयः। पयसी। पयांसि। पयसा। पयोभ्याम्॥

पयस्+ स्
पयस्+ (ससजुषो रुँः)
पयर्= पयः

पयस्+ जस्
पयस्+इ
पय न् स् +इ (नपुंसकस्य झलचः)
पयान् स् + इ (सान्तमहतः संयोगस्य)
पयां स् + इ (नश्चापदान्तस्य झलि)
पयांसि

पयस्+ भ्याम् (ससजुषो रुँः)
पयर्+ भ्याम् (हशि च)
पय उ+ भ्याम्= पयोभ्याम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सकारान्तेषु ‘सुपुंस्’शब्दस्य रूपाणि

सुपुम् = शोभनाः पुमांसो यस्मिन् तत्कुलम्

लघुसिद्धान्तकौमुद्याम्
(हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुपुम् | सुपुंसी | सुपुमांसि |
| सम्बोधनम् | हे सुपुम् | हे सुपुंसी | हे सुपुमांसि |
| द्वितीया | सुपुम् | सुपुंसी | सुपुमांसि |
| तृतीया | सुपुंसा | सुपुम्भ्याम् | सुपुम्भिः |
| चतुर्थी | सुपुंसे | सुपुम्भ्याम् | सुपुम्भ्यः |
| पञ्चमी | सुपुंसः | सुपुम्भ्याम् | सुपुम्भ्यः |
| षष्ठी | सुपुंसः | सुपुंसोः | सुपुंसाम् |
| सप्तमी | सुपुंसि | सुपुंसोः | सुपुंसु |

❖ सुपुम् । सुपुंसी । सुपुमांसि ॥

सुपुंस्+ स्
सुपुंस् + (संयोगान्तस्य लोपः)
सुपुम्

सुपुंस् + जस्
सुपुम् अस् +इ (पुंसोऽसुँङ्)
सुपु म् अन् स् +इ (नपुंसकस्य झलचः)
सुपु म् आन् स् +इ (सान्तमहतः संयोगस्य)
सुपुम् आन् स् +इ (नश्चापदान्तस्य झलि)
सुपुमांसि

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सकारान्तेषु ‘अदस्’शब्दस्य रुपाणि

## लघुसिद्धान्तकौमुद्याम् (हलन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अदः | अदौ > अमू | अदानि > अमूनि |
| द्वितीया | अदः | अदौ > अमू | अदानि > अमूनि |
| तृतीया | अमुना | अदाभ्याम् > अमूभ्याम् | अदेभिः > अमीभिः |
| चतुर्थी | अदस्मै > अमुष्मै | अदाभ्याम् > अमूभ्याम् | अदेभ्यः > अमीभ्यः |
| पञ्चमी | अदस्माद् > अमुष्मात्-द् | अदाभ्याम् > अमूभ्याम् | अदेभ्यः > अमीभ्यः |
| षष्ठी | अदस्य > अमुष्य | अदयोः > अमुयोः | अदेषाम् > अमीषाम् |
| सप्तमी | अदस्मिन् > अमुष्मिन् | अदयोः > अमुयोः | अदेषु > अमीषु |

❖ अदः। विभक्तिकार्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्॥
इति हलन्तनपुंसकलिङ्गाः।

**॥ इति षड्लिङ्गप्रकरणम् ॥**

अदस्+ स्
अदः

अदस् + जस्
अदस् +इ
अद+इ (त्यदादित्वं पररूपं च)
अदन् +इ (नपुंसकस्य झलचः)
अदान्+इ (उपधादीर्घः)
अदानि
अमूनि (उत्वमत्वे)

**1.स्वमोर्लुक् केन सूत्रेण  भवति ?**

क. नपुंसकाच्च

ख. हल्ङ्याब्भ्यो दीर्घात्सुँतिस्यपृक्तं हल्

ग. स्वमोर्नपुंसकात्

घ. यस्येति च

**2.'स्वनडुह्' इत्यत्र दत्त्वं केन सूत्रेण ?**

क. झलां जशोऽन्ते

**ख. वसुँस्रंसुँध्वंस्वनडुहां दः**

ग. झलां जश् झशि

घ. दादेर्धातोर्घः

**3. 'स्वनड्वाहि' इत्यत्र अनुस्वारः कस्यास्ति ?**

क. आमः मकारस्य

ख. नुँमः मकारस्य

**ग. नुँमः नकारस्य**

घ. अनुस्वार-आगमस्य

**4. 'वार्' इत्यस्य शुद्धं रूपं नास्ति—**

क. वाः

**ख. वः**

ग. वारी

घ. वारि

**5. सप्तम्यामिदं रूपं शुद्धं नास्ति ?**

क. वार्षु

ख. वारि

ग. वारोः

**घ. वार्ष्षु**

**6. 'किम्'शब्दाद् बहुवचने 'जश्शसोः शि' इति सूत्रेण तस्य स्थाने श्यादेशे मकारस्य स्थाने नकारे इकारस्य स्थाने अकारे कृते किं रूपं सिद्ध्यति ?**

क. किम्

ख. कानि

ग. केषाम्

**घ. प्रश्ने असमीचीना प्रक्रियास्ति।**

**7. अन्वादेशविषये अपूर्णं विकल्पं चिनुत ?**

क. एनत्-द्/ इदम्

ख. एने/ इमे

ग. एनानि/ इमानि

**घ. एनेन**

**8. 'अहः' इत्यत्र विसर्गः कस्य स्थाने ?**

क. सकारस्य

ख. षकारस्य

**ग. नकारस्य**

घ. रोः रेफस्य

**9. 'अनः'अकारलोपः विभाषया कुत्र भवति ?**

क. अह्नी, अहनि

ख. अह्नि, अहनि

ग. अह्नि, अहानि

**घ. अह्नी, अहनी, अह्नि, अहनि**

**10. 'अहोभ्याम्' इत्यस्य इयं प्रक्रिया समीचीना—**

क. 'अहन्+ भ्याम्' इत्यत्र नकारस्य स्थाने रेफादेशे तस्य उत्वे गुणे च कृते सिद्धम्।

ख. 'अहस्+ भ्याम्' इत्यत्र सकारस्य रुँत्वे 'हसि च' इत्युत्वे 'आद्गुणः' इत्यनेन गुणे च कृते सिद्धम्।

ग. 'अहन्+ भ्याम्' इत्यत्र 'अहन्' इति सूत्रेण नकारस्य स्थाने रुँत्वे 'आद्गुणः' इत्यनेन गुणे च कृते सिद्धम्।

**घ. 'अहन्+ भ्याम्' इत्यत्र 'अहन्' इति सूत्रेण नकारस्य स्थाने रुँत्वे तस्य उत्वे 'आद्गुणः' इत्यनेन गुणे च कृते सिद्धम्।**

**11. 'दण्डि' इत्यस्य मूलं प्रातिपदिकं किम् ?**

**क. दण्डिन्**

ख. दण्डी

ग. दण्डि

घ. दण्डीन्

**12. 'सुपथि, सुपथि, सुपथि, सुपथी, सुपथी, सुपन्थानि, सुपन्थानि' रूपाणि क्रमशः सन्ति ?**

क. सप्तमी-द्वितीया-प्रथमैकवचनस्य, प्रथमा-द्वितीयाबहुवचनस्य द्विवचनस्य च।

ख. द्वितीया-प्रथमा- सप्तम्यैकवचनस्य, द्वितीयाद्विवचनस्य बहुवचनस्य च।

**ग. प्रथमा-द्वितीया-सप्तम्यैकवचनस्य, प्रथमा-द्वितीयाद्विवचनस्य बहुवचनस्य च।**

घ. प्रथमा-द्वितीया-सप्तम्यैकवचनस्य, संबोधनस्य प्रथमा-द्वितीयाद्विवचनस्य बहुवचनस्य च।

**13. 'ऊर्ज्'शब्दविषये इदं कथनं सङ्गतं नास्ति—**

क. 'ऊर्क्- ऊर्ग्' इति रूपद्वयं प्रथमाया एकवचने भवति।

ख. ‘ऊर्जी’इति रूपं प्रथमा-द्वितीयायाः द्विवचने भवति। सप्तम्यां न भवति।

ग. ‘ऊर्न्जि’ इत्यत्र क्रमशः— ऊ न् र् ज् इ एते वर्णाः सन्ति।

**घ. ‘ऊर्न्जि’ इत्यत्र नुँमागमः ‘इकोऽचि विभक्तौ’ सूत्रेण भवति।**

**14.एतेषु इदं रूपं त्रिषु लिङ्गेषु भवति—**

क. तौ

ख. ते

ग. तयोः

**घ. ते, तयोः**

**15. ‘गवाञ्चि गोचि गोची गवाक्षु’— एतेषु एकवचनस्य रूपम् अस्ति।**

क. गवाञ्चि

**ख. गोचि**

ग. गोची

घ. गवाक्षु

**16.बहुवचने इदं रूपं शुद्धम्—**

**क. ददति ददन्ति**

ख. तुदति तुदन्ति

ग. पचति पचन्ति

घ. जगति जगन्ति

**17. नपुंसकलिङ्गे नकारान्तानां सम्बोधने कति रूपाणि ?**

क. २

ख. ३

**ग. ४**

घ. १

**18.द्विवचने इदम् अपूर्णम् —**

क. शकृती

ख. ददती

ग. दीव्यती

**घ. तुदती**

**19.एतेषु भिन्नं चिनुत—**

क. अहः

ख. धनुः

ग. हविः

**घ. वाः**

**20. ‘चक्षूंषि’ इदं रूपं कुत्र न भवति ?**

क. प्रथामायाम्

ख. द्वितीयायाम्

**ग. सप्तम्याम्**

घ. सम्बोधने

**21. सप्तम्यां बहुवचने रूपाणि चिनुत—**

क. धनुःषु

**ख. धनुःषु, धनुष्षु**

ग. धनुःषु, धनुष्षु, धनुक्षु

घ. धनुष्षु

**22.भ्यामि सकारस्य रुँत्वे 'हशि चे'त्युत्वे गुणे च कृते सिद्धं भवति—**

क. पयोभ्याम्

**ख. अहोभ्याम्**

ग. मनोभ्याम्

घ. यशोभ्याम्

**23. 'सुपुम्' इत्यत्र सकारस्य स्थाने असुङादेशे 'सुपुम् अस्' इति ततो 'नपुंसकस्य झलचः' इति सूत्रेण नुँमागमे 'सान्तमहते'ति दीर्घे 'सुपुमान् स्' इत्यवस्थायां नस्यानुस्वारे कृते इदं रूपं संभवति—**

**क. सुपुमांसि**

ख. सुपुमान्सि

ग. सुपुंसी

घ. सुपुंमांसि

**24. 'एत ईद्बहुवचने' इति सूत्रं नपुंसकलिङ्गे अदस्-शब्दे कतिषु स्थानेषु प्रवर्त्तते ?**

क. सप्तसु

ख. षट्सु

**ग. पञ्चसु**

घ. चतुर्षु

**25. अदस्-शब्दस्य त्रिषु लिङ्गेषु कानि रूपाणि समानानि भवन्ति ?**

क. असौ अमीभिः अमूः

**ख. अमू अमूभ्याम् अमुयोः**

ग. अमुष्य अमूभ्याम् अमुष्मिन्

घ. अमू अमूभिः अमीषाम्